करोति। निरीक्ष्यतां कदाचिदस्मिन्नेव भारते वर्षे यायजूकै राजसूयादियज्ञा व्ययाजिषत, कदाचिदिहैव वर्ष-वाताऽऽतप-हिम-सहानि तपांसि अतापिषत। सम्प्रति तु म्लेच्छैर्गावो हन्यन्ते, वेदा विदीर्यन्ते, स्मृतयः समृद्यन्ते, मन्दिराणि मन्दुरीक्रियन्ते, सत्यः पात्यन्ते, सन्तश्च सन्ताप्यन्ते। सर्वमेतन्माहात्म्यं तस्यैव महाकालस्येति कथं धीरधौरेयोऽपि धैर्यं विधुरयसि? शान्तिमाकलय्यातिसङ्क्षेपेण कथय यवन-राज्य-वृत्तान्तम्। न जाने किमित्यनावश्यकमपि शुश्रूषते मे हृदयम्"—इति कथयित्वा तूष्णीमवतस्थे।

धनिनां वासः" इत्यमरः। शृङ्गाटकम्=चतुष्पथम्। "चौराहा" इति हिन्दी। चत्वरम्=अङ्गणम्। "अङ्गणं चत्वराजिरे" इत्यमरः। उद्यानम्=वाटिका। "पुमानाक्रीड उद्यानम्" इत्यमरः। गोष्ठं "गोस्थानकमि"त्यमरः। "गोशाला" इति हिन्दी। प्राचुर्यार्थे मयट्। एतत्प्रचुराणीत्यर्थः। काननीकरोति=जङ्गलीकरोति। यायजूकैः=इज्याशीलैः। "इज्याशीलो यायजूकः" इत्यमरः। व्ययाजिषत=कृताः, व्युपसृष्टाद् यजेर्लुङि। अतापिषत=तप्तानि। मन्दुरीक्रियन्ते=वाजिशालीक्रियन्ते। "वाजिशाला तु मन्दुरा" इत्यमरः। पात्यन्ते, पातिव्रत्यात्। व्यभिचार्यन्त इत्यर्थः। धीरधौरेयः=धीरधुरन्धरः। विधुरयसि=विकलयसि। "वैकल्येऽपि च विश्लेषे विधुरं विकले त्रिष्वि"ति मेदिनी। शुश्रूषते=श्रोतुमिच्छति। "ज्ञाश्रुस्मृदृशां सनः" इत्यात्मनेपदम्।

महलों, अट्टालिकाओं, चौराहों, चबूतरों, उपवनों, सरोवरों और गोशालाओं से भरे नगरों को जंगल बना देते हैं। देखिए कभी इसी भारतवर्ष में याज्ञिकों ने राजसूय आदि यज्ञ किये थे, कभी यहीं पर वर्षा, आँधी, धूप और हिमपात सह कर तपस्याएँ की गयी थी, परन्तु इस समय म्लेच्छों द्वारा गायें मारी जाती हैं, वेद की पुस्तकें फाड़ी जाती हैं, स्मृतियाँ कुचली जाती हैं, मन्दिर घुड़साल बनाये जाते हैं, सतियों का सतीत्व नष्ट किया जाता है और सज्जनों को कष्ट पहुँचाया जाता है। यह सब उसी महाकाल की महिमा है, आप धीर-श्रेष्ठ होकर भी धैर्य क्यों खोते हैं? शान्त होकर अति संक्षेप में यवन-राज्य का वृत्तान्त कहिये। अनावश्यक समझते हुए भी, न जाने क्यों मन इसे सुनना चाहता है।" यह कहकर योगिराज चुप हो गये।

अथ स मुनिः—"भगवन्! धैर्येण, प्रसादेन, प्रतापेन, तेजसा वीर्येण, विक्रमेण, शान्त्या, श्रिया, सौख्येन, धर्मेण, विद्यया समभेत्र परलोकं सनाथितवति तत्रभवति वीरविक्रमादित्ये, शनैः शनैः पारस्परिक-विरोध-विशिथिलीकृतस्नेहबन्धनेषु राज भामिनी-भ्रूभङ्ग-भूरिभाव-प्रभाव-पराभूत-वैभवेषु भटेषु, स्वार्थ-चिन्त सन्तान-वितानैकतानेष्वमात्यवर्गेषु, प्रशंसामात्रप्रियेषु प्रभुषु, "इ स्त्वं वरुणस्त्वं कुबेरस्त्वम्" इति वर्णनामात्रसक्तेषु बुधजनेषु कश्च गजिनी-स्थाननिवासी महामदो यवनः ससेनः प्राविशद् भार वर्षे। स च प्रजा विलुण्ठ्य, मन्दिराणि निपात्य, प्रतिमा विभिद्य, प

सनाथितवति=सनाथं कृतवति। धैर्यादिना साकं सनाथीकरणमि सहोक्तिरलङ्कारः। सौकुमार्यं नाम गुणः, अमङ्गलस्य विस्पष्टमनभिधाना तत्रभवति=श्रेष्ठे "तत्र च भावेने"ति सप्तमी। पारस्परिकविरोधे विशिथिलीकृतानि=शिथिलतामापादितानि स्नेहबन्धनानि यैस्तेषु भामिनीनाम्=मानिनीनाम्, भ्रूभङ्गाः=सकटाक्षेक्षणानि, भूरिभाव =हावाद्याश्चेष्टाः, तेषां प्रभावेण पराभूतानि=तिरस्कृतानि, वै वानि=धनानि येषां तादृशेषु। गजिनी="गजनी" इति लोके प्रसिद्ध संस्कृतशब्दापभ्रंशीभूता एव सर्वे भाषाशब्दा इत्यभिप्रायेण प्रायः सार्थ संस्कृतशब्दानामेव नामादिष्वपि प्रयोगः महामदः=महमूद इति लो प्रसिद्धं तन्नाम, देशनाम्ना "महमूद गजनवी" इति वृत्तेषु समुल्लिखितम्

तदनन्तर उन मुनि ने कहना प्रारम्भ किया—"भगवन्! धै प्रसन्नता, प्रताप, तेज, बल, पराक्रम, शान्ति, शोभा, सुख, धर्म और वि के साथ वीर विक्रमादित्य के परलोक चले जाने पर, राजाओं पारस्परिक स्नेहबन्धन के आपसी झगड़ों के कारण ढीले पड़ जाने प वीरों के, कामिनियों के कटाक्षों और हाव-भाव के प्रभाव में आकर सा सम्पत्ति बरबाद कर चुकने पर, अमात्यों के स्वार्थचिन्तामात्रपरायण जाने पर, राजाओं के प्रशंसामात्र प्रिय हो जाने पर तथा विद्वानों 'आप इन्द्र हैं, आप वरुण हैं, आप कुबेर हैं' कहकर चाटुकारिता कर प्रभुओं को प्रसन्न करने में लग जाने पर, गजिनी स्थान निवासी, कि महमूद नाम के यवन ने सेना के साथ भारतवर्ष में प्रवेश किया। वह प्र

श्शनान् जनांश्च दासीकृत्य, शतश उष्ट्रेषु रत्नान्यारोप्य स्वदेश-मनैषीत्। एवं स ज्ञातास्वादः पौनःपुन्येन द्वादशवारमागत्य भारत-मलुलुण्ठत्। तस्मिन्नेव च स्वसंरम्भे एकदा गुर्जरदेश-चूडायितं सोमनाथतीर्थमपि धूलीचकार। अद्य तु तत्तीर्थस्य नामापि केनापि न स्मर्यते; परं तत्समये तु लोकोत्तरं तस्य वैभवमासीत्। तत्र हि महार्ह-वैदूर्य-पद्मराग-माणिक्य-मुक्ताफलादि-जटितानि कपाटानि स्तम्भान्, गृहावग्रहणीः, भित्तीः, वलभीः विटङ्कानि च निर्मथ्य, रत्ननिचयमादाय, शतद्वय-मणसुवर्ण-शृङ्खलावलम्बिनीं चञ्चच्चाकचक्य-चकितीकृतावलोचक-लोचन-निचयां महाघण्टां प्रसह्य संगृह्य, महादेवमूर्तावपि गदामुदतूतुलत्।

---

अलुलुण्ठत् = लुण्ठितवान्। गुर्जरदेश-चूडायितम् = गुर्जरदेशभूषणतुल्यम्। धूलीचकार = नाशयामास। जटितानि, 'जट, झट सङ्घात' इत्यस्य प्रयोगः "जड़े हुवे" इति हिन्दी। गृहावग्रहणीः = देहलीः। भित्तीः = कुड्यानि। वलभीः = गोपानसीः। "गोपानसी तु वलभी च्छादने वक्रदारुणी"-त्यमरः। "छज्जा" इति हिन्दी "धरना" इति वा। मणशब्दो लोके "मन" इति ख्यातः। चञ्चता = समुच्छलता, चाकचक्येन, चकितीकृतः = विस्मेरीकृतः, अवलोचकलोचनानाम् = द्रष्टृजननयनानाम्, निचयः = समूहो यया

---

को लूट कर, मन्दिरों को ध्वस्त कर, मूर्तियों को तोड़ कर, सैकड़ों लोगों को दास बनाकर, सैकड़ों ऊँटों पर रत्न लाद कर, अपने देश को ले गया। इस प्रकार, स्वाद मिल जाने के कारण बार-बार आकर उसने बारह बार भारतवर्ष को लूटा। अपने इन्हीं हमलो में उसने एक बार गुजरात के आभूषण-तुल्य सोमनाथ तीर्थ को भी धूल में मिला दिया। आज तो उस तीर्थ का नाम भी किसी को याद नहीं है, पर उस समय उसका वैभव लोकोत्तर था। उसमें बहुमूल्य वैदूर्य (मूंगा), पद्मराग, हीरे और मोती जड़े किवाड़ों, खम्भों देहलियों, दीवारों, छज्जों और कबूतरों के दरबों को छानकर, रत्नराशि लेकर, दो सौ मन सोने की जंजीर में लटकने वाली और देदीप्यमान चमचमाहट से दर्शकों के

अथ "वीर! गृहीतमखिलं वित्तम्, पराजिता आर्य्यसेना
बन्दीकृता वयम्, सञ्चितममलं यशः, इतोऽपि न शाम्यति ते क्रो
श्चेदस्मांस्ताडय, मारय, छिन्धि, भिन्धि, पातय, मज्जय, खण्ड
कर्तय, ज्वलय; किन्तु त्यजेमामकिञ्चित्करीं जडां महादेव-प्रतिमाम्
यद्येवं न स्वीक्रोरोषि तद् गृहाणास्मत्तोऽन्यदपि सुवर्णकोटिद्वयम्
त्रायस्व, मैनां भगवन्मूर्ति स्प्राक्षीः" इति साम्रेडं कथयत्सु रुदत्सु पत
विलुण्ठत्सु प्रणमत्सु च पूजकवर्गेषु; "नाहं मूर्तीर्विक्रीणामि, कि
भिनद्मि" इति संगर्ज्य जनताया हाहाकार-कलकलमाकर्णयन् घोत

ताम्। उदतूतुलत् = उदतिष्ठिपत्। प्रहृतवानिति यावत्। उत्पूर्वकादु
नार्थकाच्चौरादिकात् तुलधातोः कर्त्तरि लुङि। "अकिञ्चित्करीं जडामि
तदीयबोधमादाय तत्प्रीतये वा, न वस्तुगत्येति बोध्यम्। स्प्राक्षीः, माङ्
लुङ्, अत एव नाट्। स्प्राक्षीः स्पृक्ष इत्यपि रूपे। जनतायाः = जनसमूहस्

नेत्रों को चकाचौंध कर देनेवाली महाघण्टा को जबर्दस्ती हथिया कर, महा
की मूर्ति पर भी गदा उठाई।

उसके बाद पुजारियों के "वीर! तुमने सारा धन ले लिया, हिन्दु
की सेनाओं को हरा दिया, हम लोगों को बन्दी बना लिया, निर्मल य
का सञ्चय कर लिया, यदि इतने पर भी तुम्हारा क्रोध शान्त न हुआ हो
हमें पीटो, मारो, चीर डालो, काट डालो, ( पहाड़ से ) नीचे गिरा दो, (स
में) डुबा दो, टुकड़े-टुकड़े कर डालो, कतर डालो, जला डालो, लेकिन
बेचारी जड़ महादेव की मूर्ति को छोड़ दो। यदि इस तरह भी स्वीकार न हो
हमसे दो करोड़ स्वर्णमुद्राएँ और ले लो, रक्षा करो, इस महादेवमूर्ति
मत छुओ।" यह कहकर बार-बार विनय करने पर, रोने-गिड़गिड़ा
पैरों पड़ने, भूमि पर लोटने और प्रणाम करने पर, "मैं मूर्ति बेचता न
किन्तु तोड़ता हूँ" यों गरज कर, जनता की हाहाकार ध्वनि के बीच

गदया मूर्तिमतुत्रुटत् । गदापातसमकालमेव चानेकार्बुदपद्ममुद्रा-मूल्यानि रत्नानि मूर्तिमध्यादुच्छलितानि परितोऽवाकीर्यन्त । स च दग्धमुखः तानि रत्नानि मूर्तिखण्डानि च क्रमेलकपृष्ठेष्वारोप्य सिन्धु-नदमुत्तीर्य स्वकीयां विजयध्वजिनीं गजिनीं नाम राजधानीं प्राविशत् ।

अथ कालक्रमेण सप्ताशीत्युत्तरसहस्रतमे ( १०८७ ) वैक्रमाब्दे सशोकं सकष्टं च प्राणांस्त्यक्तवति महामदे, गोरदेशवासी कश्चित् शहाबुद्दीन-नामा प्रथमं गजिनीदेशमाक्रम्य, महामदकुलं धर्म-राजलोकाध्वन्यध्वनीनं विधाय, सर्वाः प्रजाश्च पशुमारं मारयित्वा, तद्रुधिरार्द्रमृदा गोरदेशे बहून् गृहान् निर्माय चतुरङ्गिण्याऽनीकिन्या

अतुत्रुटत्=अभिनत्, भेदितवानित्यर्थः । उच्छलितानि=उत्पतितानि । दग्धमुखः=दुष्टः । "मुँहजरा" इति हिन्दी । क्रमेलकाः=उष्ट्राः, "उष्ट्रे क्रमेलकमयमहाङ्गा" इत्यमरः । विजयध्वजिनीम्=विजयध्वजवतीम् । "न कर्मधारयाद्" इति निषेधस्यासार्वत्रिकत्वमुक्तम् ।

गोरदेशः=सिन्धुनद्याः पश्चिमदिशि यवनप्रधानो देशविशेषः । शहाबुद्दीनमपि देशनाम्ना "शहाबुद्दीन गोरी" इति कथयन्ति । अध्वनीनम्=पान्थम् । चतुर्भिरङ्गैः समेता चतुरङ्गिणी । "हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयमि"त्यमरः । अनीकिन्या=सेनया । शीतलशोणि-

महमूद गजनवी ने भीषण गदा से मूर्ति तोड़ डाली । गदा गिरते ही अनेक अरब पद्म मूल्य के रत्न मूर्ति से उछलकर इधर-उधर बिखर गये । वह मुँहजला उन रत्नों और मूर्तिखण्डों को ऊँटों की पीठ पर लाद कर, सिन्धु नद को पार कर अपनी विजयध्वज वाली राजधानी गजनी में प्रविष्ट हुआ ।

तदनन्तर, समय के फेर से वि० सं० १०८७ में महमूद की शोक और क्लेशपूर्वक मृत्यु हो जाने पर, गोरदेश निवासी शहाबुद्दीन नामक किसी यवन ने, पहले गजनी देश पर आक्रमण करके, महमूद के, वंशजों को यमलोक के पथ का पथिक बनाकर, सारी प्रजा को पशुओं की मौत मारकर, प्रजा के रुधिर से गीली मिट्टी से गोरदेश में अनेक महलों का निर्माण कर, चतुरङ्गिणी

भारतवर्षं प्रविश्य, शीतलशोणितानप्यसयन् पञ्चाशदुत्तर-द्वादश शतमितेऽब्दे ( १२५० ) दिल्लीमश्वयाम्बभूव।

ततो दिल्लीश्वरं-पृथ्वीराजं-कान्यकुब्जेश्वरं जयचन्द्रं च पारस्परिकविरोध-ज्वर-ग्रस्तं विस्मृत-राजनीतिं भारतवर्ष-दुर्भाग्यायमाणमाकलय्यानायासेनोभावपि विशस्य, वाराणसीपर्यन्तमखण्डमण्डलमकण्टकमकीटकिट्टं महारत्नमिव महाराज्यमङ्गीचकार, तेन वाराणस्यामपि बह्वोऽस्थिगिरयः प्रचिताः, रिङ्गत्तरङ्ग-भङ्गा गङ्गाऽपि शोणित-शोणा शोणीकृता, परस्सहस्राणि च देवमन्दिराणि भूमिसात्कृतानि।

तान्=अनुष्णरक्तान् युद्धेच्छाविरहितान् इतिः भावः। असयन्=असि घ्नन्। अश्वयाम्बभूव=अश्वैरतिचक्राम। 'तेनातिक्रामति' इति णिच् विस्मृता राजनीतिः="वयं पञ्च वयं पञ्च वयं पञ्च शतञ्च ते। परैः स विवादे तु वयं पञ्चोत्तरं शतम्" इत्येवं यौधिष्ठिरनीतिः, येन त आकलय्य=अवधार्य। विशस्य=घातयित्वा, अकीटकिट्टम्=कीटकि विरहितम्। कीटाः=कृमयः, किट्टम्=मलम्। अस्थिगिरयः=कीक पर्वताः। गिरिशब्दप्रयोगो महतो नाशकाण्डस्य ध्वननाय। रिङ्गन्तः=चलन् तरङ्गभङ्गाः=ऊर्मिभेदा यस्यां सा। शोणितेन शोणा=रक्ता। शोणी कृता=शोणनदतामापादिता। मेकलगिरिसमुद्भूतो विहारविहारी महान

सेना के साथ भारतवर्ष में प्रवेश कर, ठण्डे खून वाले ( युद्ध की इच्छा रहित ) भारतीयों को भी तलवार के घाट उतारते हुए, १२५० में दिल्ली घुड़सवार सेना से घेर लिया।

तत्पश्चात् मुहम्मद गोरी ने दिल्लीश्वर पृथ्वीराज और कन्नौज-नरे जयचन्द को आपसी फूट रूपी ज्वर से ग्रस्त, राजनीति के ज्ञान से शून्य, भारतवर्ष का दुर्भाग्यस्वरूप समझकर, दोनों को अनायास ही मारकर, वाराण तक विस्तृत, निष्कण्टक, कीट और मल से अस्पृष्ट महारत्न के समान राज्य अधिकार कर लिया। वाराणसी में भी उसने हड्डियों के बहुत से पहाड़ दिये, चञ्चल तरंगों वाली गंगा को भी (भारतीयों के) रुधिर से रँग कर शोण

स एव प्राधान्येन भारते यावनराज्याङ्कुराऽऽरोपकोऽभूत् । तस्यैव च कश्चित् क्रीतदासः कुतुबुद्दीननामा प्रथमभारतसम्राट् संजातः।

तमारभ्याद्यावधि राक्षसा एव राज्यमकार्षुः। दानवा एव च दीनानदीदलन् । अभूत् केवलम् अकबरशाह–नामा यद्यपि गूढशत्रु-र्भारतवर्षस्य, तथापि शान्तिप्रियो विद्वत्प्रियश्च । अस्यैव प्रपौत्रो मूर्तिमदिव कलियुगं, गृहीतविग्रह इव चाधर्मः, आलमगीरोपाधिधारी अवरङ्गजीवः सम्प्रति दिल्लीवल्लभतां कलङ्कयति । अस्यैव पताकाः

---

शोणः । भूमिसात्कृतानि = धूलिसात्कृतानि । भारतसम्राट्, सम्राट्सदृशे लाक्षणिकोऽयं शब्दः ।

राक्षसाः= निर्दयाः हिंसाप्रियाश्च। अदीदलन्=अजीघतन्, हिंसितवन्त इत्यर्थः । गूढशत्रुः=गुप्तरिपुः । राजपुत्रवंश्यैः सहोद्वाहादिसम्बन्धं प्राचारयदिति मुद्रान्तरेण सर्वान् म्लेच्छान् विधित्सुरासीदिति तत्त्वम् । अवरङ्गजीवः= "औरङ्गजेव" इति नामवान् ।

---

बना दिया, और हजारों देव-मन्दिरों को धूल में मिला दिया।

भारतवर्ष में यवन-राज्य का बीजारोपण (मुसलमानी राज्य के अङ्कुर आरोपण) मुख्यतः उसी ने किया, और उसी का कुतुबुद्दीन नाम का एक गुलाम भारतवर्ष का प्रथम यवन सम्राट् हुआ।

उससे लेकर आज तक राक्षसों ने ही राज्य किया है, और दानवों ने ही दीनों की निर्मम हत्या की है। केवल अकबर नाम का बादशाह—यद्यपि वह भी भारतवर्ष का गुप्त शत्रु था—कुछ शान्तिप्रिय और विद्वानों का आदर करने वाला हुआ। उसी का प्रपौत्र, मूर्तिमान कलियुग और शरीर धारण करके आया हुआ अधर्म-सा औरङ्गजेव—जिसने 'आलमगीर' उपाधि धारण कर रखी है—इस समय दिल्ली के शासन को कलंकित कर रहा है।

केकयेषु मत्स्येषु मगधेषु अङ्गेषु वङ्गेषु कलिङ्गेषु च दोधूयन्ते, केव
दक्षिणदेशेऽधुनाऽप्यस्य परिपूर्णो नाधिकारः संवृत्तः।

दक्षिणदेशो हि पर्वतबहुलोऽस्ति अरण्यानीसङ्कुलश्चास्ती
च्चिरोद्योगेनापि नायमशकन्महाराष्ट्रकेसरिणो हस्तयितुम्। साम्प्र
मस्यैवाऽऽत्मीयो दक्षिणदेश-शासकत्वेन "शास्तिखान" नामा प्रेष्य

---

वितस्ताया ( झेलम ) श्चंद्रभागाया ( चनाव ) श्चान्तरालवर्त्ती केक
देशः = रामायणसमये "गिरिव्रज" नाम्ना ख्याता नगर्येतदीयराजधान्यासीत्
भरतजनन्याः केकय्या जन्मभूरियमेवेति रामायणे व्यक्तम्। गिरिव्रजस्य ( गिं
झक ) यवनसाम्राज्यकाले "जलालपुर" इति नामकरणमभूत्।

इन्द्रप्रस्थात् पश्चिमस्थो दृषद्वत्याश्च दक्षिणस्थो मरुभूमेः पूर्वस्थो भूख
मत्स्यदेशः। मगधदेशः = कीकटापरनामा वर्त्तमान-दक्षिणविहारो गयाए
गृहादिसमवेतः। अङ्गदेशः = वर्त्तमान-भागलपुरसंवलितो भूखण्डविशे
अङ्गदेशात् पूर्वस्थितोऽधुना वङ्गालनाम्ना ख्यातो वङ्गदेशः। कलिङ्गदेश:
'उड़ीसा' इति साम्प्रतं ख्यातः।

अरण्यानी = महदरण्यम्, तया सङ्कुलः = व्याप्तः। महाराष्ट्रके
रिणः, अत्र केसरिपदं श्रेष्ठवाचकम्,

"स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः।
सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः॥" इत्यमरः।

हस्तयितुम् = हस्ते कर्तुम्। वशीकर्तुमिति यावत्। शान्तिखानः

---

केकय (पंजाव), मत्स्य (राजपूताना), मगध ( दक्षिण विहार ), अङ्ग ( पू
विहार ), वङ्ग ( वङ्गाल ) और कलिङ्ग ( उड़ीसा ) में आज इसी के झ
फहरा रहे हैं, केवल दक्षिण देश ही ऐसा है जहाँ अभी भी इसका
अधिकार नहीं हो पाया है।

दक्षिण देश में पर्वतों की अधिकता है और घने जंगल भी
बहुत हैं, इसीलिये बहुत दिनों के प्रयत्न के वावजूद भी औरं
सिंहसदृश मराठों को वश में नहीं कर सका। सुना जाता है कि अव

इति श्रूयते । महाराष्ट्रदेशरत्नम्, यवन-शोणित-पिपासाऽऽकुलकृपाणः, वीरता-सीमन्तिनी-सीमन्त-सुन्दर - सान्द्र - सिन्दूर - दान - देदीप्यमान-दोर्दण्डः, मुकुटमणिर्महाराष्ट्राणाम् , भूषणं भटानाम् , निधिर्नीतीनाम्, कुलभवनं कौशलानाम्, पारावारः परमोत्साहानाम्, कश्चन प्रातः-स्मरणीयः, स्वधर्माऽऽग्रह-ग्रह-ग्रहिलः, शिव इव धृतावतारः शिववीर-श्चास्मिन् पुण्यनगरान्नेदीयस्येव सिंहदुर्गे ससेनो निवसति । विजय-पुराधीश्वरेण साम्प्रतमस्य प्रवृद्धं वैरम् । "कार्यं वा साधयेयं देहं वा पातयेयम् !" इत्यस्य सारगर्भा महती प्रतिज्ञा । सतीनाम्,सताम्, त्रैवर्णि-कस्य आर्यकुलस्य,धर्मस्य, भारतवर्षस्य च आशा-सन्तान-वितानस्याय-

---

"शाइस्ता खां" इति प्रसिद्धं नाम । रत्नशब्दस्य नित्यक्लीवत्वम् । यवना-नाम् = मोहमदानां, शोणितस्य पिपासायामाकुलः कृपाणो यस्य सः । वीरस्य भावो वीरता = शूरता, सैव सीमन्तिनी = ललना, तस्याः सीमन्ते = केशवेशे, सुन्दरं सान्द्रं = घनं, यत् सिन्दूरदानं = नागकेशरचर्चनं, तेन देदीप्यमानो दोर्दण्डः = बाहुदण्डो यस्य सः । श्रुत्यनुप्रासः । स्वधर्मस्य = सनातनधर्मस्य, य आग्रहग्रहः = हठादपि पालनम्, तत्र ग्रहिलः = दृढतरः । शिव इवेत्युत्प्रेक्षा । शिववीरः = "शिवाजी" इति विख्यातः । पुण्य-नगरात्–"पूना" इति ख्यातात् । नेदीयसि = अतिशयेनान्तिक इति नेदीयान्, तस्मिन् । आशायाः, सन्तानम् = परम्परा, तस्य, वितानम् = विस्तारः, तस्य ।

---

का सगा-सम्बन्धी शाइस्ता खाँ दक्षिण देश का शासक बनाकर वहाँ भेजा जा रहा है । महाराष्ट्र देश के रत्न, यवनों के रुधिर की प्यासी तलवार वाले, वीरता रूपी नायिका की माँग में सुन्दर चटकीला सिन्दूर लगाने से देदीप्यमान भुजाओं वाले, मराठों के मुकुटमणि, योद्धाओं के आभूषण, नीतियों के निधान, निपुणताओं के कुलगृह, परम उत्साहों के सागर, प्रातःस्मरणीय, सनातनधर्म के दृढ़तम पालक, अवतार धारण कर आये शिव के समान, महाराज शिवाजी पूना नगर के निकट ही सिंहगढ़ में सेनासहित रह रहे हैं । बीजापुर-नरेश के साथ इस समय इनकी शत्रुता बढ़ी हुई है । 'या तो कार्य को ही पूरा करूँगा, या देह को ही नष्ट कर डालूँगा' यह इनकी सारगर्भित गम्भीर प्रतिज्ञा है । सतियों, सज्जनों,

मेवाऽऽश्रयः। इयमेव वर्तमाना दशा भारतवर्षस्य। किमधिकं विनिवे यामो योग-बलावगत-सकल-गोप्यतम-वृत्तान्तेषु योगिराजेषु" इ कथयित्वा विरराम।

तदाकर्ण्य विविध-भाव-भङ्ग-भासुर-वदनो योगिराजो मुनिरा तत्सहचरांश्च निपुणं निरीक्ष्य, तेषामपि शिववीरान्तरङ्गतामङ्गीकृत मुनिवेषव्याजेन स्वधर्मरक्षाव्रतिनश्चोररीकृत्य "विजयतां शिववी सिद्धचन्तु भवतां मनोरथाः" इति मन्दं व्याहार्षीत्।

अथ "किमपि पिपृच्छिषामी"ति शनैरभिधाय बद्धकरसम् सोत्कण्ठे जटिलमुनौ "अवगतम्, यवनयुद्धे विजय एव, दैवादाप ग्रस्तोऽपि च सखिसाहाय्येनाऽऽत्मानमुद्धरिष्यति" इति सम णीत्। मुनिश्च 'गृहीतमि'त्युदीर्य, पुनः किञ्चिद् विचार्य्येव, स्मृत्वेव दीर्घमुष्णं निःश्वस्य, रोरुध्यमानैरपि किञ्चिदुद्गतैर्बाष्पबिन्दु

योगबलेन=योगसामर्थ्येन, अवगतः=विज्ञातः, सकलो गोप्यतमः=रहस्यात्म वृत्तान्तो यैस्तेषु। दीर्घमुष्णं निःश्वस्य, गभीरशोकद्योतकमिदम्। रोरुध्यमानैः

द्विज आर्यों, धर्म और भारतवर्ष की आशाओं के एकमात्र आधार यही है भारतवर्ष की यही वर्तमान दशा है। आप योगिराज हैं और योगबल से स अत्यन्त गोप्य वृत्तान्त भी जानते हैं, अतः आपसे अधिक क्या कहना?" कह कर मुनि चुप हो गये।

यह वृत्तान्त सुनकर, योगिराज का मुख विविध भाव-भङ्गियों से खि उठा। उन्होंने मुनि और उनके साथियों को गौर से देखकर, उन्हें भी शिवा के अन्तरङ्ग सहायक समझ कर, और मुनि के वेष के बहाने अपने धर्म की र करने में कटिबद्ध जानकर, धीरे से 'वीर शिवाजी की जय हो, आपके मनो पूरे हों' यह कहा।

तत्पश्चात्, धीरे से, 'मैं कुछ पूछना चाहता हूँ' यह कहकर, जटाधा मुनि के उत्कण्ठापूर्वक हाथ जोड़ने पर योगिराज बोले, "समझ लि यवन-युद्ध में शिवाजी की जीत ही होगी, दुर्दैव से आपत्तिग्रस्त होकर मित्रों की सहायता से वे अपने को उबार लेंगे।' मुनि ने भी, 'भगवन्! स गया' यह कह कर, पुनः कुछ विचार-सा करके, कुछ स्मरण-सा करके,

राकुलनयनो "भगवन् ! प्रायो दुर्लभो युष्मादृक्षाणां साक्षात्कार इत्यपराऽपि पृच्छाऽऽच्छादयति माम्" इति न्यवेदीत्। स च "आम् ! ऊरीकृतम्, जीवति सः, सुखेनैवाऽऽस्ते" इत्युदतीतरत्। अथ "तं कदा द्रक्ष्यामि" इति पुनः पृष्टवति "तद्विवाहसमये द्रक्ष्यसि" इत्यभिधाय, बहूनि सान्त्वना-वचनानि च गम्भीर-स्वरेणोक्त्वा, सपदि उपत्यकाम्, गण्डशैलान्, अधित्यकां चाऽऽरुह्य पुनस्तस्मिन्नेव पर्वतकन्दरे तपस्तप्तुं जगाम।

ततः शनैः शनैर्निर्यातिष्वपरिचितजनेषु, संवृत्ते च निर्मक्षिके, मुनिर्गौरवटुमाहूय, विजयपुराधीशाऽऽज्ञया शिववीरेण सह योद्धुं ससेनं प्रस्थितस्य अपजलखानस्य विषये यावत् किमपि प्रष्टुमियेष, तावत् पादचारध्वनिमिव कस्याप्यश्रौषीत्। तमवधार्याऽन्यमनस्के इव मुनौ

भृशं वार्यमाणैः। ऊरीकृतम् = स्वीकृतम्। उदतीतरत् = उत्तरयाञ्चकार। सान्त्वना-वचनानि=सामवाक्यानि। उपत्यकाम्=अद्रेरधः सन्निहितां भूमिम्। गण्डशैलान् = पर्वतात् पतितान् स्थूलपाषाणान्। "गण्डशैलास्तु च्युताः स्थूलोपला गिरेरि"त्यमरः। अधित्यकाम्=अद्रेरूर्ध्वां भूमिम् "उपा-धिभ्यां त्यकन्नासन्नारूढयोरि"त्युभयत्रापि त्यकन्। "उपत्यकाऽद्रेरासन्ना भूमिरूर्ध्वमधित्यके"त्यमरः। निर्मक्षिके=मक्षिकाणामभावो निर्मक्षिकं तस्मिन्, एकान्ते। मानवसञ्चारदेशे सर्वत्र मक्षिकास्तिष्ठन्तीति तदभावेन

और गरम साँस लेकर, रोके जाने पर भी कुछ निकल आये अश्रुकणों से आकुल-नेत्र होकर निवेदन किया : 'भगवन् ! आपके समान महात्माओं का दर्शन दुर्लभ है, अतः एक और प्रश्न मुझे उत्सुक कर रहा है।' योगिराज के 'हाँ; स्वीकार किया, वह जीवित है, सुखपूर्वक ही है।' यह उत्तर देने पर, मुनि ने फिर पूछा : 'उसे कब देखूँगा ?' 'उसके विवाह के समय देखोगे।' यह कह कर, गम्भीर स्वर से अनेक प्रकार के आश्वासन देकर, योगिराज उसी समय पर्वत की घाटी, पर्वत से गिरी हुई बड़ी-बड़ी शिलाओं और पर्वत के ऊपर की भूमि पर चढ़कर पुनः उसी गुफा में तपस्या करने चले गये।

उसके बाद, अपरिचित लोगों के धीरे-धीरे चले जाने और एकान्त हो जाने पर, मुनि ने ज्यों ही गौरबटु को बुला कर, बीजापुरनरेश की आज्ञा से वीर शिवाजी के साथ लड़ने के लिये सेना के साथ कूच कर चुके अफ़जल खाँ के विषय में कुछ पूछना चाहा कि किसी के पैरों की आहट सुनाई दी।

गौरबटुरपि तेनैव ध्वनिना कर्णयोः कृष्ट इव समुत्थाय, निपुणं परि
निरीक्ष्य, पर्य्यटच, 'कोऽयम् ?' इति च साम्रेडं व्याहृत्य, कमप्यनव
लोक्य, पुनर्निवृत्य, 'मन्ये मार्जारः कोऽपि' इति मन्दं गुरवे निवे
पुनस्तथैवोपविवेश। मुनिश्च 'मा स्म कश्चिदितरः श्रौषीत्' इ
सशङ्कः क्षणं विरम्य पुनरुपन्यस्तुमारेभे--

"वत्स गौरसिंह! अहमत्यन्तं तुष्यामि त्वयि, यत् त्वमेका
अपजलखानस्य त्रीनश्वान् तेन दासीकृतान् पञ्च ब्राह्मणतनयां
मोचयित्वा आनीतवानसीति। कथं न भवेरीदृशः ? कुलमेवेदृ
राजपुत्रदेशीयक्षत्रियाणाम्"। तावत् पुनरश्रूयत मर्मरः पादक्षेपश्च
ततो विरम्य, मुनिः स्वयमुत्थाय, प्रोच्चं शिलापीठमेकमारुह्
निपुणतया परितः पश्यन्नपि कारणं किमपि नावलोकयामा
चरणाक्षेपशब्दस्य। अतः पुनरेकतानेन निपुणं निरीक्षमाणेन गौ

जन-सञ्चाराभावो लक्ष्यते। श्रौषीत्=मा आकर्णयतु। उपन्यस्तुम्=
कथयितुम्। राजपुत्रदेशः=राजपुत्रशब्दापभ्रंशीभूतो लोके सम्प्र
"राजपूताना" इति प्रसिद्धशब्दव्यपदेश्यो देशः। मर्मरः=शुष्कपर्णध्वनि
"अथ मर्मरः। स्वनिते वस्त्रपर्णानामि"त्यमरः। एकतानेन=एकचित्ते

उसे सुन कर मुनि के अन्यमनस्क से हो जाने पर, वह गोरा ब्रह्मचारी उ
ध्वनि से आकृष्ट हुआ-सा उठ कर, चारों ओर भलीभाँति देख कर, टहल क
वार-वार 'कौन है' कह कर, किसी को न पाकर, फिर लौट कर, गुरु से, धी
से, 'मालूम होता है कोई विल्ली है, यह कह कर, फिर वैसे ही बै
गया। मुनि ने भी 'कोई दूसरा न सुन ले' इस आशङ्का से थोड़ी देर रु
कर फिर कहना शुरू किया :

"वेटा गौरसिंह ! मैं तुम पर वहुत प्रसन्न हूँ। तुम अकेले
अफजल खाँ के तीन घोड़ो और उसके द्वारा दास वनाये गये प
ब्राह्मण वालकों को छुड़ा कर ले आये। तुम ऐसे क्यों न हो
राजपूताने के क्षत्रियों का कुल ही ऐसा है।" इसी बीच मर्मर ध्वनि और प
की आहट पुनः सुनाई दी। तव वोलना वन्द कर, मुनि ने स्वयं उठकर ए
ऊँची शिला पर चढ़कर, चारों ओर भलीभाँति देखा, पर पैरों की आ
का कोई कारण नहीं दिखाई दिया। इसलिए, एकाग्रचित्त होकर नि

सिंहेन दृष्टम्, यत् कुटीर-निकटस्थ-निष्कुटक-कदलीकूटे द्वित्रास्तरवोऽतितरां कम्पन्ते इति। तदेव संशयस्थानमित्यङ्गुल्या निर्दिश्य, कुटीर-वलीके गोपयित्वा स्थापितानामसीनामेकमाकृष्य, रिक्तहस्तेनैव मुनिना पृष्ठतोऽनुगम्यमानः कपोल-तल-विलम्बमानान् चक्षुश्चुम्बिनः कुटिल-कचान् वामकराङ्गुलिभिरपसारयन्, मुनि-वेषोऽपि किञ्चित् कोप-कषायित-नयनः, कर-कम्पित-कृपा-कृपण-कृपाणो महादेवमारिराधयिषुस्तपस्विवेषोऽर्जुन इव शान्तवीररस-द्वयस्नातः सपदि समागतवान् तन्निकटे, अपश्यच्च लता-प्रतान-वितान-वेष्टित-रम्भा-स्तम्भ-त्रितयस्य मध्ये नीलवस्त्र-खण्ड-वेष्टित-

निष्कुटा एव निष्कुटकाः = गृहारामाः, "गृहारामास्तु निष्कुटाः" इत्यमरः, कुटीरनिकटे तिष्ठन्तीति कुटीरनिकटस्थाश्च ते गृहारामास्तेषु, कदलीनाम् = रम्भाणाम्, कूटे = समूहे। वलीके = पटले। "वलीकनीध्रे पटलप्रान्ते" इत्यमरः। "छप्पर की ओरी" इति हिन्दी।

रिक्तहस्तेन = शून्यकरेण। कपोलतल-विलम्बमानान् = गण्ड-संलग्नान्। किञ्चित्कोपेन = ईषत्क्रोधेन, कषायिते = कलुषिते, नयने = नेत्रे, यस्य सः। करे कम्पितः कृपाकृपणः = दयाशून्यः, कृपाणः = असिर्यस्य सः। आरिराधयिषुः = सेवितुमिच्छुः। शङ्करसमाराधाय करकलितचापो मध्यमपाण्डवस्तपश्चचारेति महाभारतीया कथा किरातार्जुनीयमहाकाव्यमूलभूता। पूर्णोपमा। लतानाम् = वल्लीनाम्, "वल्ली तु व्रततिर्लता" इत्यमरः,

भलीभाँति देखते हुए गौरसिंह ने देखा कि कुटी के निकट की गृहवाटिका में केलों के झुरमुट में दो-तीन पेड़ बहुत अधिक हिल रहे हैं। 'सन्देह का स्थान वही है' ऐसा उँगली के इशारे से बताकर, छप्पर की ओरी में छिपाकर रखी गयी तलवारों में से एक तलवार खींच कर गौरसिंह उसी ओर चल दिया। मुनि खाली हाथ ही उसके पीछे हो लिये। गालों पर लटकते और आँखों पर आ जाने वाले अपने घुँघराले बालों को बाँयें हाथ की उँगलियों से सँभालते हुए, मुनिवेष में होते हुए भी कुछ क्रोध से लाल नेत्र किये हुए, हाथ में निर्दय तलवार लिये हुए, महादेव की आराधना करने के लिए तपस्वी वेषधारी अर्जुन के समान शान्त और वीर दोनों रसों से सराबोर गौरसिंह, झट उसके समीप पहुचा और वहाँ आकर उसने लताओं की विस्तृत बेलों से वेष्टित केले के तीन पेड़ों के बीच, नीले कपड़े के

मूर्द्धानं हरित-कञ्चुकं श्याम-वसनानद्ध-कटितट-कर्बुराधोवसनम् काकासनेनोपविष्टम्, रम्भालवाल-लग्नाधोमुख-खड्गत्सरुन्यस्त विपर्यस्त-हस्त-युगलम्, लशुनगन्धिभिर्निश्वासैः कदली-किसलयानि मलिनयन्तम्, नवाङ्कुरित-श्मश्रु-श्रेणि-च्छलेन कन्यकापहरण-पङ्क कलङ्कपङ्क-कलङ्किताननम्, विंशतिवर्ष-कल्पं यवनयुवकम् । त

प्रतानानि = सूक्ष्मतन्तवस्तेषाम्, वितानम् = विस्तारः, तेन वेष्टितम् = व यितम्, रम्भास्तम्भानां त्रितयम् = कदलीस्तम्भत्रयं, तस्य । यवनयु मपश्यदित्यन्वयः । तमेव विशिनष्टि—नील्या रक्तं नीलं, तच्च वस्त्रखण्ड तेन वेष्टितो मूर्धा यस्य तम् । हरितः = हरिद्वर्णः, कञ्चुकः = चो यस्य तम् । "अङ्गरखा, चोंगा" इति हिन्दी । श्यामवसनेन = कृष्णव "वस्त्रमाच्छादनं वासश्चैलं वसनमंशुकमि"त्यमरः, आनद्धम् = आ दितम्, कटितटे कर्बुरम् = अनेकवर्णम्, "चित्रं किर्मीर-कल्माषश ताश्च कर्बुर" इत्यमरः, अधोवसनम् = नाभ्यूरुजङ्घाच्छादनम्, "त लुङ्गी" इति हिन्दी, यस्य तम् । काकासनेन = चिबुकार्पितजानुयुगलास रम्भाया आलवाले = आवापे, "स्यादालवालमावाप" इत्यमरः, वृ मूले समन्ततोऽम्भसां धारणार्थं वेष्टनमालवालम्, "ओटा" इति हिन्दी, अ मुखस्य = निम्नाननस्य, खड्गस्य त्सरौ = मुष्टौ, "तलवार की मूँठ" हिन्दी "त्सरुः खड्गादिमुष्टौ स्यादि"त्यमरः । विशिष्टवाचकानां श सति विशेषणे विशेष्यमात्रपरत्वमित्यभियुक्ताभ्युपगमात् प्रकृतेऽधिकपददोष नवकाशः । न्यस्तम् = स्थापितम्, विपर्यस्तम् = न्युब्जीभूतम् हस्तयुगल करद्वयं यस्य तम् । लशुनस्य गन्ध इव गन्धो येषां तैः, किसलयानि = पल्लवानि । नवाङ्कुरितायाः = नवस्फुरितायाः, श्मश्रुश्रेण्याः छले कन्यकाया अपहरणरूपं यत् पङ्कम् = पापम् "अस्त्री पङ्कं पुमान् प

टुकड़े को सिरपर लपेटे हुए, हरे रंग का कुर्ता पहने हुए, कमर में काला बाँधे हुए, चितकवरे रंग की लुङ्गी पहने हुए, काकासन से ( घुटनों में ठोढ़ी डालकर, सिकुड़कर) बैठे हुए, केले के थाले पर अधोमुख रखी की मूठ पर दोनों हाथ उलटे रखे हुए, लहसुन की दुर्गन्ध से युक्त निश्वा कदलीवृक्ष के पल्लवों को मलिन करने वाले जरा-जरा सी निकलती रेखा और दाढ़ी ) के बहाने कन्यापहरण रूप पापकर्म से उत्पन्न अपयश रूपी

परस्परं चाक्षुषे सम्पन्ने दृष्टोऽहमिति निश्चित्य, उत्प्लुत्य, कोशात् कृपाणमाकृष्य, युयुत्सुः सोऽपि सम्मुखमवतस्थे। ततस्तयोरेवं सञ्जाताः परस्परमालापाः।

गौरसिंहः—कुतो रे यवन-कुल-कलङ्क !

यवन-युवकः—आः ! वयमपि कुत इति प्रष्टव्याः ? भारतीय-कन्दरिकन्दरेष्वपि वयं विचरामः, शृङ्ग-लाङ्गूल-विहीनानां हिन्दुपद-व्यवहार्याणां च युष्मादृक्षाणां पशूनामाखेटक्रीडया रमामहे।

गौरसिंहः—[ सक्रोधं विहस्य ] वयमपि तु स्वाङ्कागतसत्त्ववृत्तयः

इत्यमरः, तस्य यः कलङ्कः=दुर्यशः। स एव पङ्कः=कर्दमः, "पङ्कोऽस्त्री शादकर्दमावि"त्यमरः, तेन कलङ्कितम्=भ्रष्टम्, आननं यस्य तम्। मुख-समुद्भूतश्मश्रूणां कलङ्कपङ्कत्वेनोत्प्रेक्षा। विंशतिवर्षकल्पम्=प्रायो विंशतिवर्ष-वयस्कम्। चाक्षुषे=चक्षुरिन्द्रियजन्यप्रत्यक्षे। उत्प्लुत्य=उत्पत्य। "कूद कर" इति हिन्दी। युयुत्सुः=योद्धुमिच्छुः, अवतस्थे=स्थितः, "समवप्रविभ्यः स्थः" इत्यात्मनेपदम्। भारतीयाः=भारतभवाः, ये कन्दरिणः=शैलास्तेषां कन्दरेषु=गुहासु। आखेटक्रीडया=मृगयाखेलया। स्वाङ्के आगताः सत्त्वाः=प्राणिन एव वृत्तयः=जीवनसाधनानि, येषां ते। दीर्घश्चासौ

कलङ्कित मुखवाले, लगभग बीस वर्ष की उम्र के एक मुसलमान युवक को देखा। तदनन्तर सामना हो जाने पर, 'मैं देख लिया गया हूँ' यह समझकर, [झु]रमुट से कूदकर म्यान से तलवार खींचकर, वह मुसलमान युवक भी लड़ने के [लि]ए सामने खड़ा हो गया। तदनन्तर उन दोनों की आपस में इस प्रकार बातचीत [हु]ई :

गौरसिंह—क्यों रे यवन-कुलकलङ्क ! यहाँ कहाँ से आया ?

यवनयुवक—अरे ! हमसे भी 'कहाँ' से पूछता है ? हम भारतवर्ष की [पर्व]तगुफाओं में भी विचरण करते हैं, और हिन्दू नामधारी तुम जैसे सींग-पूछ हीन पशुओं का शिकार कर आनन्द मनाते हैं।

गौरसिंह—( क्रोधपूर्वक हँसकर ) पास में आये हुए दुष्ट जीवों पर ही

शिवस्य गणा अत्रैव निवसामः, तत् सुप्रभातमद्य, स्वयमेव त्वं दीप्ते दाव-दहने पतङ्गायितोऽसि ।

यवनयुवकः—अरे रे वाचाल! ह्यो रात्रौ युष्मत्कुटीरे रुदतीं सम्‌यातां ब्राह्मण-तनयां सपदि प्रयच्छथ, तत् कदाचिद् दयया जीवतोऽपि त्यजेयम्, अन्यथा मदसिभुजङ्गिन्या दष्टाः क्षणात् कथावशेषाः संवत्स्र्यथ।

कलकलमेतमाकर्ण्य श्यामवटुरपि कन्यासमीपादुत्थाय दृष्ट्वा हन्तुमेतं यवनवराकं पर्य्याप्तोऽयं गौरसिंह इति मा स्म गमदन्योऽ कश्चित् कन्यकामपजिहीर्षुरिति वलीकादेकं विकटखड्गमाकृष्य तत् गृहीत्वा कन्यकां रक्षन्, तदध्युषित-कुटीर-निकट एव तस्थौ ।

---

दावदहनः=वनाग्निस्तस्मिन् । "दवदावौ वनानले" इत्यमरः । जीवतः, रूपमिदम्=युष्मानित्यध्याह्रियमाणविशेष्यस्य विशेषणम् । मद भुजङ्गिनी=सर्पिणी, तया । रूपकम् । संवत्स्र्यथ, "वृद्भ्यः स्यसनोर् परस्मैपदम्, "न वृद्भ्यश्चतुर्भ्यः" इतीण्निषेधः ।

कलकलम्=कोलाहलम् । वलीकात्=पटलप्रान्तात्, तया=कन्या अध्युषितस्य=सेवितस्य, कुटीरस्य निकटे तस्थौ=स्थितः ।

---

जीवित रहने वाले शिव के गण रूप हम लोग भी तो यहीं रहते हैं, तो की सुबह बहुत शुभ है, तुम स्वयं ही धधकती दावाग्नि में पतंग की तरह आ गये हो ।

यवनयुवक—अरे बकवादी ! कल रात जो ब्राह्मण की लड़की हुई तुम्हारी कुटी में आई थी, उसे तुरन्त मेरे हवाले कर दो, तो शायद करके तुम्हें जीता छोड़ दूँ, नहीं तो क्षण भर में ही मेरी इस नागिन सी त से डसे गये तुम्हारी सिर्फ कहानी ही बाकी बचेगी ।

यह कोलाहल सुनकर, साँवला ब्रह्मचारी भी, बालिका के पास से उठ यवनयुवक और गौरसिंह को देखकर, यवनयुवक का काम समाप्त कर के लिए अकेले गौरसिंह को ही काफी समझ कर, बालिका का अपहरण कोई दूसरा यवन भी न आ जाय, यह सोचकर छप्पर की ओरी से एक तलवार खींचकर उसकी मूँठ पकड़कर, बालिका की रक्षा करता हुआ कुटी में बालिका थी, उसके समीप ही खड़ा हो गया ।

गौरसिंहस्तु "कुटीरान्तः कन्यकाऽस्ति, सा च यवन-वध-व्यसनिनि मयि जीवति न शक्या द्रष्टुमपि, किं नाम स्प्रष्टुम्? तद् यावत् तव कवोष्ण-शोणित-तृषित एष चन्द्रहासो न चलति, तावत् कूर्दनं वा, उत्फालं वा यच्चिकीर्षसि तद् विधेहि" इत्युक्त्वा व्यालीढ-मर्य्यादया सज्जः समतिष्ठत।

ततो गौरसिंहः दक्षिणान् वामांश्च परश्शतान् कृपाणमार्गानङ्गी-कृतवतः, दिनकर-कर-स्पर्श-चतुर्गुणीकृत-चाकचक्यैः चञ्चच्चन्द्रहास-चमत्कारैश्चक्षूंषि मुष्णतः, यवन-युवक-हतकस्य, केनाप्यनुपलक्षितो-द्योगः, अकस्मादेव स्वासिना कलित-क्लेद-सञ्जात-स्वेदजल-जालं

---

यवनानां वध एव व्यसनं यस्य तादृशे। कवोष्णस्य=ईषदुष्णस्य, "कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति" इत्यमरः। शोणितस्य=लोहितस्य, तृषितः=पिपासितः। चन्द्रहासः=खड्गः="खड्गे तु निस्त्रिंशचन्द्रहासासि-रिष्टयः" इत्यमरः। कूर्दनं वा उत्फालं वा="कूदना, उछलना" इति हिन्दी। व्यालीढं=युद्धावस्थानविशेषः, तन्मर्यादया। कोदण्डमण्डनादिषु प्रसिद्धमिदम्। "पैंतरा" इति हिन्दी।

दिनकरकराणाम्=सूर्यकिरणानाम्, स्पर्शेन चतुर्गुणीकृतम्—वर्धितम्, चाकचक्यम्=प्रतिभासविशेषो यैस्तैः। चञ्चच्चन्द्रहासचमत्कारैः= सञ्चरत्खड्गचमत्कारैः। मुष्णतः=चोरयतः। हतकस्य=दुष्टस्य। केनापीत्य-नुपलक्षितविशेषणम्। "सविशेषणानां वृत्तिर्न" इति तु न नित्यसापेक्षस्थल इति सुव्यक्तमेव। स्वासिना शिरश्चिच्छेदेत्यन्वयः। शिरो विशिनष्टि—कलितेन= व्याप्तेन, क्लेदेन=श्रमेण, सञ्जातस्य=उत्पन्नस्य, स्वेदजलस्य=घर्मजल-

---

गौरसिंह—"बालिका कुटी के भीतर है, यवनों के वध के व्यसनी मेरे जीते जी तू उसे छूना तो दूर, देख भी नहीं सकता। जब तक तेरे गरम खून की प्यासी यह तलवार नहीं चलती तब तक चाहे जो उछल-कूद मचा ले," यह कहकर पैंतरा बना कर, तैयार हो गया।

तब गौरसिंह ने, तलवार के, दायें बायें सैकड़ों पैंतरे बदलने वाले, सूर्य की किरणों के सम्पर्क से जिसकी चमक चौगुनी हो रही थी, ऐसी चलती हुई तलवार की चमचमाहट से आँखों को चौंधिया रहे उस दुष्ट यवन के, श्रम

विशिथिल-कच-कुल-मालं भग्न-भ्रू-भयानक-भालं शिरश्छिच्छेद।

अथ मुनिरपि दाडिम-कुसुमास्तरणाच्छन्नायामिव गाढ-रुधि दिग्धायां ज्वलदङ्गार-चितायां चितायामिव वसुधायां शयानं वियुज मान—भारतभुवमालिङ्गन्तमिव निर्जीवीभवदङ्गबन्ध-चालनप शोणित-सङ्घात-व्याजेनान्तः-स्थित-रजोराशिमिवोद्गिरन्तं कलि

स्य, "घर्मो निदाघः स्वेदः" इत्यमरः, जालम्=समूहो यस्मिंस्तत्। विशि लाः=इतस्ततः परिभ्रष्टाः, कचानाम्=केशानाम्, कुलस्य=समूह माला=पङ्क्तिः, यस्मिंस्तत्। भग्नया=छिन्नया, भ्रुवा=दृगूर्ध्वभागेन, "ऊ दृग्भ्यां भ्रुवौ स्त्रियौ" इत्यमरः, भयानकम्=भीषणम्, भालम्=लला यस्मिंस्तत्। जालम् मालम् भालमित्यत्र यमकम्।

वसुधायाम्=पृथिव्याम्। शयानम्=पतितम्। वसुधां विशिन गाढेन=घनीभूतेन, रुधिरेण=लोहितेन, दिग्धायाम्=लिप्तायाम्। "दिग् विषाक्तवाणे स्यात् पुंसि लिप्तेऽन्यलिङ्गक" इति मेदिनी। उत्प्रेक्षते-दाडिमस्य करकस्य, 'दाडिमस्तु त्रिलिङ्गः स्यादेलायां करके त्रिषु' इति मेदिनी, कुसु नाम्, आस्तरणेन=विष्टरेण, आच्छन्नायामिव। पुनरप्युत्प्रेक्षते-ज्वलदङ्गा चितायाम्=व्याप्तायाम्। चितायाम्=चितौ, "चिता चित्या चितिः स्त्रिया इत्यमरः। भस्मीभवनाय न यावनैश्चिता प्राप्यते। हिन्दुकरेण मृत्युमवा कियतः कालस्य कृते सा लब्धाऽनेनेति ध्वनिः। चिन्ताचितयोर्दाहकत्वप लोचनापरमिदं पद्यमनुभवपथपथिकम्-"चिन्ताचिताद्वयोर्मध्येबिन्दुमात्रं विशे कम्। सजीवं दहते चिन्ता निर्जीवं दहते चिता॥" यवनहतकं विशिन निर्जीवीभवताम्=निष्प्राणतां गच्छताम्, अङ्गबन्धानाम्=शरीरसन्धीन चालने, परम्=निरतम्। शोणितसङ्घातव्याजेन=रुधिरप्रवाहच्छले

करने से निकले हुए पसीने में तर, अस्तव्यस्त बालों वाले, टेढ़ी भौहों से भया लगने वाले ललाट से युक्त शिर को अकस्मात् ऐसी सफाई से काट डा कि कोई देख भी न पाया।

तत्पश्चात् मुनि ने भी, अनार के फूलों के बिछौने से ढकी हुई सी, खून से लथपथ हो रही, जलते अंगारों से व्याप्त चिता के समान पृथ्वी लुढ़क रहे, बिछुड़ती हुई भारत भूमि का आलिङ्गन करते हुए से निर्जी रही अंगसंधियों को हिलाते और छटपटाते हुए, रुधिर राशि के बहाने भीत

सायन्तन-घनाऽऽडम्बर-विभ्रमं सतत-ताम्रचूड-भक्षण-पातकेनेव ताम्रीकृतं छिन्न-कन्धरं यवनहतकमवलोक्य सहर्षं ससाधुवादं सरोमोद्गमं च गौरसिंहमाश्लिष्य, भ्रूभङ्गमात्राऽऽज्ञप्तेन भृत्येन मृतककञ्चुक-कटिबन्धोष्णीषादिकमन्विष्याऽऽनीतं पत्रमेकमादाय सगणः स्वकुटीरं प्रविवेश।

इति प्रथमो निश्वासः।

---

अन्तःस्थितो यो रजोराशिः = रजोगुणसमूहः तमिवेत्युत्प्रेक्षा। उद्गिरन्तम् = वमन्तम्। कलितः = धारितः, सायन्तनस्य = सायम्भवस्य, घनाडम्बरस्य = मेघविडम्बनायाः, विभ्रमः = विलासो येन तम्। सततम् = सर्वदा यं ताम्रचूडस्य = कुक्कुटस्य, "कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः" इत्यमरः, भक्षणम् = अशनम्, तदेव पातकम् = पापं तेनेव, ताम्रीकृतम् = रक्तीकृतम्। छिन्न-कन्धरम् = कृत्तग्रीवम्। सायङ्कालिकसूर्य इव सञ्जातमिति यावत्। कटिबन्धः = जघनपट्टिका, "पेटी" इति हिन्दी। उष्णीषम् = शिरोवेष्टनम्।

निश्वास इति वाक्यविन्यासरूपे गद्यकाव्ये निश्वासप्रश्वासा एव परिच्छेदका भवन्तीति परिच्छेदकानामङ्कसर्गाध्यायादिसंज्ञाः समुपेक्ष्य निश्वाससंज्ञामेवादरयाञ्चकार ग्रन्थकारः। यद्यपि बाणादिभिरुच्छ्वाससंज्ञा गृहीता, किन्तु सा शोक-क्रोधादावेवापेक्षितेति तामपि तत्याज। भवति चात्र प्राचीनं पद्यम्—"प्रौढिप्रकर्षेण पुराणरीति-व्यतिक्रमः श्लाघ्यतमः कवीनाम्" इति ग्रन्थकृच्छिष्यकृता टिप्पणी।

इति शिवराजविजयवैजयन्त्यां प्रथमनिश्वासविवरणम्।

---

रजोगुण को उगलते हुए से, सायंकालीन मेघ के समान, मानो निरन्तर मुर्गा खाने के पाप से लाल हो गये, कटे हुए सिर वाले, दुष्ट यवन को देखकर, हर्षपूर्वक, शावाशी देते हुए, रोमाञ्चित होकर, गौरसिंह का आलिंगन कर आँखों के इशारे मात्र से आज्ञप्त भृत्य द्वारा, मृतक के चोंगे, कमरबन्द और पगड़ी की तलाशी लेकर लाये गये एक पत्र को लेकर, सब के साथ अपनी कुटी में प्रवेश किया।

शिवराजविजय का प्रथम निश्वास समाप्त।

॥ श्रीः ॥

# अथ द्वितीयो निश्वासः

रात्रिर्गमिष्यति भविष्यति सुप्रभातम्
भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः ।
इत्थं विचिन्तयति कोशगते द्विरेफे
हा हन्त ! हन्त !! नलिनीं गज उज्जहार ॥—स्फुटकम् ।

---

कपटपटुरपजलखानः शिवं निग्रहीतुं कीर्तिमर्जयितुं च विहितविविधमनो
श्रीमता शिवेनैव निगृहीतो मृत्युवशगः कृतश्चेति द्वितीयनिश्वासकथाभागो
पायाऽऽदौ "रात्रिर्गमिष्यति" इति पद्यं समुल्लिखति । व्याख्या चास्य निता
सरला । द्विरेफपदं च द्वौ रेफौ यस्मिन्निति व्युत्पत्त्या रेफद्वयवत्त्वेन भ्रमर
पस्थापनद्वारा मधुकरवाचकम्, योगरूढं चेति नेतरतादृशशब्दसङ्ग्रहानुचिन्त
भवति चात्र कोशः 'द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः' इति । परे तु ते
धर्मेण लाक्षणिकं मन्यन्ते; तेषां निरूढिरेव कारणत्वेनाभिप्रेता । अद्यतनान
नोभयविधभविष्यत्स्थले लुट्प्रयोगस्यैवेष्टव्यत्वेऽपि पूर्वं विशेषाविवक्षायां लृटि
विशेषान्वेषणमिति स्थलेष्वीदृशेषु नासाधुत्वविषयकभ्रान्तिरवलम्बनीयेति
अपजलखानः प्रतापदुर्गाविदूर एव तिष्ठति स्मेति सम्बन्धः । अपजल

---

"रात बीतेगी, सुहावना प्रभात होगा, सूर्य उदित होगा, कमल खिल
( और मैं बाहर निकल आऊँगा )" कमल-कली के अन्दर बन्द भौंरा यह
ही रहा था कि कमल को हाथी ने उखाड़ डाला ।

इतस्तु स्वतन्त्र–यवनकुल–भुज्यमान–विजयपुराधीश–प्रेषितः पुण्यनगरस्य समीपे एव प्रक्षालित–गण्डशैल–मण्डलायाः, निर्झर-वारिधारा–पूर–पूरित–प्रबल–प्रवाहायाः, पश्चिम–पारावार–प्रान्त-प्रसूत–गिरि–ग्राम–गुहा–गर्भ–निर्गताया अपि प्राच्य–पयोनिधि-चुम्बन–चञ्चुरायाः, रिङ्गत्–तरङ्ग–भङ्गोद्भूतावर्त्त–शत–भीमायाः,

---

विशिनष्टि–स्वतन्त्रम् स्वच्छन्दम् यद् यवनकुलं तेन भुज्यमानस्य=शास्य-मानस्य, विजयपुरस्य=तन्नामकनगरस्य, अधीश्वरेण, प्रेषितः=प्रहितः। इदं तात्कालिकस्थितिप्रदर्शनमात्रफलकं न तु साहित्यिकविवेचनया समुपयोगि विशेषणमिति वेदितव्यम्।

भीमाया नीरं कटूकुर्वन्निति सम्बन्धः। नदीं विशिनष्टि-प्रक्षालि-तानि = धौतानि, गण्डशैलानाम्=गिरिच्युतस्थलशिलानाम् मण्डलानि यया तस्याः। निर्झराणाम्=जलनिर्गमस्रोतसाम्, वारिधारापूरैः= जलधारासमूहैः, पूरितः=भरितः, प्रबलः=वेगवान्, प्रवाहो=यस्या-स्तस्याः। पश्चिमश्चासौ पारावारः=समुद्रः "समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः" इत्यमरः, तस्य, प्रान्ते=निकटप्रदेशे यः प्रसूतः=उत्पन्नः, गिरीणां ग्रामः = समूहः, तस्य गुहाः = गह्वराणि, तासां गर्भतः = मध्याद्, निर्गतायाः=समुत्पन्नायाः। प्राच्यः=प्राचीभवः, यः पयोनिधिः, तच्चुम्बने चञ्चुरायाः=चपलायाः। पश्चिमसमुद्रान्निःसृत्य पूर्वसमुद्रं प्रविष्टाया इति वाच्योऽर्थः। एवमुक्तिः पाश्चात्त्यरमणीनां प्राच्यसम्पर्करूपसाम्प्रतिकव्यवहारो-पहासाय। रिङ्गताम्=सञ्चलताम्, तरङ्गाणाम्=ऊर्मीणाम्, भङ्गैः=छेदैः,

---

इधर स्वेच्छाचारी यवनों द्वारा शासित बीजापुर के अधिपति द्वारा भेजा गया, पूना के समीप ही, पर्वतों से गिरे हुए बड़े-बड़े पर्वतों को धोने वाली, झरनों की जलधाराओं से पूर्ण प्रबल प्रवाह वाली, पश्चिमी सागर की तटवर्ती पर्वत श्रेणियों की गुफाओं से निकली हुई भी पूर्वी समुद्र को चूमने को उतावली (पूर्वी समुद्र में गिरने वाली), चञ्चल लहरों के टूटने से उत्पन्न होने वाले सैकड़ों भँवरों के कारण भयंकर लगने वाली भीमा नदी के निरन्तर

भीमाया नद्याः, अनवरत-निपतद्-बकुल-कुल-कुसुम-कदम्ब-सुरभीकृत मपि नीरं वगाहमान-मत्त-मतङ्गज-मद-धाराभिः कटूकुर्वन्; हय-हेषा ध्वनि-प्रतिध्वनि-बधिरीकृत-गव्यूति-मध्यगाध्वनीनवर्गः, पट कुटीर-कूट-विहित-शारदाम्भोधर-विडम्बनः, निरपराध-भारत

उद्भूताः = उत्पन्नाः, ये आवर्ताः = अम्भसां भ्रमाः, तेषां शतैः भीमायाः = भयदायिन्याः। "घोरं भीमं भयानकम्" इत्यमरः। भीमायाः = 'भीमा नामवत्याः। अनवरतम् = सततम्, निपतताम् = प्रच्यवताम्, बकुलकु कुसुमानाम् = वञ्जुल-समूह-सुमनानाम्, कदम्बेन = समूहेन, सुरभीकृतम् = सुगन्धितामापादितम्। वगाहमानानाम् = प्रविशताम्, जलक्रीडां कुर्वताम् भावः, "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः" इत्यल्लोपः, मत्तानाम् = द मरितानाम्, मतङ्गजानाम् = करिणाम्, मदधाराभिः = दानजलैः। क करणे हेतुः। हयानाम् = अश्वानाम्, हेषा = ध्वनिः। यद्यपि हेषाशब्दोऽश्वश "अश्वानां हेषा ह्रेषा च निःस्वनः" इत्यमरात् तथा चाश्वशब्दोच्चारणमनपे तम्, तथापि विशिष्टवाचकपदानां सति विशेषणवाचकपदान्तरप्रयोगे विशे मात्रपरत्वस्य "सकीचकैर्मारुतपूर्णरन्ध्रैः" इत्यादिषु दृष्टत्वेन केवलनिःस्वनवा कत्वेन नाश्वशब्दवैयर्थ्यमिति वेदितव्यम्।

तद्ध्वनिप्रतिध्वनिभिः बधिरीकृतः = श्रुतिसामर्थ्यविकलीकृ गव्यूतिमध्यगः = क्रोशद्वयान्तरालवर्ती, "गव्यूतिः स्त्री क्रोशयुगम्" इत्यम अध्वनीनवर्गः = पथिकसमूहो येन सः। पटकुटीराणाम् = उपका काणाम्, "उपकार्योपकारिका" इत्यमरः, कूटैः = समूहैः, विहिता, शा दाम्भोधराणाम् = शरन्मेघानाम्, निर्जलत्वेन श्वेतवर्णानामिति तात्पर्य

गिर रहे बकुल पुष्पों से सुगन्धित जल को जलक्रीडा कर रहे मदमत्त हाथि की मदधारा से कटु बनाता हुआ, घोड़ों के हिनहिनाने की आवाज की प्रतिध्व से दो कोस तक के यात्रियों को बहरा बना देनेवाला, सफेद खेमों के समूह शरद के बादलों का उपहास करने वाला, निरपराध भारतीय जनता के उत्पी

ऽभिजन-जन-पीडन-पातक-पटलैरिव समुद्धूयमान-नीलध्वजैरुपलक्षितः, विजयपुरेश्वरस्यान्यतमः सेनानीः अपजलखानः प्रतापदुर्गादविदूर एव शिववीरेण सहाऽऽहवद्यूतेन चिक्रीडिषुः ससेनस्तिष्ठति स्म ।

अथ जगतः प्रभाजालमाकृष्य, कमलानि सम्मुद्रय, कोकान् सशोकीकृत्य, सकल-चराचर-चक्षुःसञ्चार-शक्ति शिथिलीकृत्य, कुण्डलेनेव निज-मण्डलेन पश्चिमामाशां भूषयन्, वारुणी-सेवने-

विडम्बना = अनुकृतिर्येन सः । समुद्धूयमानैः = कम्पमानैः, नीलध्वजैः = नीलपताकाभिः, उपलक्षितः = युतः । उत्प्रेक्षते—निरपराधानाम् = निर्दोषाणाम्, भारताभिजनानाम् = भारतीयानाम् । यत्र पूर्वरुपितं तदभिजनात्मना-ऽऽख्यायते । तिष्ठति स्म = अतिष्ठत् । 'लट् स्मे' इति स्मयोगे लट् । अन्यतमः = अनेकेष्वेकः । आहवद्यूतेन = युद्धदुरोदरेण ।

अथ भगवान् भास्वान् चक्षुषामगोचर एव सञ्जात इति सम्बन्धः । जगतः = संसारस्य । प्रभाजालम् = दीप्तिसमूहम् । आकृष्य = आकुञ्च्य । सम्मुद्रय = सङ्कोच्य । कोकान् = चक्रवाकान् । "कोकश्चक्रश्चक्रवाकः" इत्यमरः । सशोकीकृत्य = दुःखिनो विधाय । दम्पत्योः परस्परं वियोगेन शोकः । सकलस्य, चराचरस्य = स्थावरजङ्गमात्मकस्य । चक्षुषाम् = नेत्राणाम् । सञ्चारस्य = कार्यकरणस्य, दर्शनस्येति यावत्, शक्तिम् = सामर्थ्यम् । कुण्डलेन = कर्णभूषणेन । 'कुण्डलं कर्णभूषणम्' इत्यमरः । पश्चिमा चासौ,

से उत्पन्न पापराशि के समान नीली पताकाओं से पहचाना जाने वाला, बीजापुराधीश का प्रधान सेनापति अफ़ज़ल खाँ, शिवाजी के साथ युद्धरूपी जुआ खेलने की इच्छा से, प्रताप दुर्ग के समीप ही सेना के साथ पड़ाव डाले हुए था ।

तदुपरान्त, संसार के प्रकाश-समूह को खींच कर कमलों को संकुचित कर, चक्रवाकों को शोकमग्न कर, सम्पूर्ण जड-चेतन जगत् की दर्शन-शक्ति को शिथिल कर, अपने कुण्डल सदृश मण्डल से पश्चिम दिशा को अलंकृत करते हुए, मानो वारुणी (पश्चिम दिशा और मदिरा) के सेवन के कारण

नेव माञ्जिष्ठ-मञ्जिम-रञ्जितः, अनवरत-भ्रमण-परिश्रम-श्रा
इव सुषुप्सुः, म्लेच्छ-गण-दुराचार-दुःखाऽऽक्रान्त-वसुमती-वेदनामि
समुद्रशायिनि निविवेदयिषुः, वैदिक-धर्म-ध्वंस-दर्शन-सञ्जात-निर्वे
इव गिरिगहनेषु प्रविश्य तपश्चिकीर्षुः, घर्म-ताप-तप्त इव समुद्र
सिस्नासुः, सायं समयमवगत्य सन्ध्योपासनमिव विधित्सुः, "नाि

आशा=काष्ठा,ताम् । "दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इत्यम
वरुणस्येयं वारुणी= पश्चिमा दिग् मद्यं च, "सुरा प्रत्यक् च वारुणी" इत्यम
मञ्जिष्ठायाः=मण्डूकपर्ण्याः, "मजीठ" इति हिन्दी, अयं माञ्जिष्ठः, स च
मञ्जिमा=रक्तिमा, तेन रञ्जितः=रक्तः । यथा जनो वारुणी–( सुरा )
पानानन्तरं शोणवर्णो भवति तथा भास्करोऽपि वारुणी-( पश्चिमा )–संसर्गा
शोणः सञ्जात इत्युत्प्रेक्षा । अनवरत-भ्रमण-परिश्रम-श्रान्तः=सततचलन
खिन्नः । सुषुप्सुः=स्वप्तुमिच्छुः । स्वाभाविकी चरमाचलप्राप्तिः खेदकारणक
नेच्छावत्त्वेनोत्प्रेक्षिता । म्लेच्छगणस्य=यवनसमूहस्य,दुराचारैः=असदाच
गोहननमन्दिरध्वंसनादिभिः, दुःखाक्रान्तायाः=कष्टपीडितायाः, वसुमत्याः
पृथिव्याः, वेदनाम्=पीडाम् । समुद्रशायिनि=विष्णौ । निविवेदयिषुः
निवेदयितुमिच्छुः । स इवेत्युत्प्रेक्षा । पत्नीक्लेशस्य पत्यावेव निवेदनीयत्वादि
भावः । वैदिकधर्मस्य=सनातनधर्मस्य, ध्वंसदर्शनेन=विनाशावलोकने
सञ्जातः=समुत्पन्नः, निर्वेदः=वैराग्यं यस्य स इव । गिरिगहनेषु=पर्व
दुर्गमेषु । चिकिर्षुः=कर्तुमिच्छुः । सिस्नासुः=स्नातुमिच्छुः । सर्वो हि त

मजीठ की-सी लालिमा से लाल, निरन्तर भ्रमण करने के परिश्रम से थके से
के इच्छुक, मानो म्लेच्छों के अनाचारों से दुःखी पृथ्वी की वेदना को समुद्र में
रहे भगवान् से कहने के इच्छुक, मानो वैदिक धर्म के ह्रास को देखकर खिन्न हो
दुर्गम पर्वतों में जाकर तप करने के इच्छुक, मानो धूप की गर्मी से सन्तप्त
के कारण समुद्र के जल में स्नान करने के इच्छुक, सायंकाल का समय हुआ

कोऽपि मत्कुले; यः सकण्ठग्रहं धर्म-ध्वंसिनो यवनहतकान् यज्ञियाद-स्माद् भारत-गर्भान्निस्सारयेत्" इति चिन्ताऽऽक्रान्त इव कन्दरि-कन्द-रेषु प्रविविक्षुर्भगवान् भास्वान्, क्रमशः क्रूरकरानपहाय, दृश्य-परिपूर्ण-मण्डलः संवृत्य, श्वेतीभूय, पीतीभूय, रक्तीभूय च गगन-धरातला-भ्यामुभयत आक्रम्यमाण इवाऽण्डाकृतिमङ्गीकृत्य, कलि-कौतुक-कवलीकृत-सदाचार-प्रचारस्य पातकपुञ्ज-पिञ्जरित-धर्मस्य च यवन-गण-ग्रस्तस्य भारतवर्षस्य च स्मारयन्, अन्धतमसे च जगत् पातयन्, चक्षुषामगोचर एव सञ्जातः।

---

स्नातुमिच्छति। अवगत्य=ज्ञात्वा। विधित्सुः=चिकीर्षुः। सकण्ठ-ग्रहम्=कण्ठं गृहीत्वा। अर्धचन्द्रं दत्त्वेत्यर्थः। णमुलन्तम्। यज्ञियात्=यज्ञकरणयोग्यात्। "यज्ञर्त्विग्भ्यां घखञौ" इति घः। प्रविविक्षुः=प्रवेष्टु-मिच्छुः। क्रूरकरान्=तीव्रकिरणान्। दृश्यम्=अवलोकयितुमर्हम्, सम्पूर्णम्=समस्तम्, मण्डलम्=विम्बं, यस्य सः। श्वेतीभूयेत्यादि स्वभावोक्तिः। अण्डाकृतिम्=सूर्योऽण्डाकृतिरेवोदेत्यस्तमेति चेति तत्काल-च्छटावलोकनेन प्रतीयते। अत्र सर्वत्रोत्प्रेक्षा। कलिकौतुकेन=कलियुग-कौतूहलेन, कवलीकृतस्य=विनष्टस्य। पातकपुञ्जेन=अघौघेन, पिञ्ज-रितस्य=पीतवर्णस्य। जर्जरीकृतस्येति भावः। धर्मस्य=सनातन-धर्मस्य। भारतवर्षस्य च स्मारयन्नित्यत्र "अधीगर्थदयेषाम्" इति कर्मणि

---

कर सन्ध्योपासन करने के इच्छुक से, 'मेरे कुल में ऐसा कोई भी व्यक्ति नहीं है, जो धर्मध्वंसी यवनों को इस यज्ञयोग्य भूमि से गर्दनियाँ देकर निकाल बाहर करे, इस प्रकार चिन्तित से होकर पर्वत की गुफा में प्रवेश करने के इच्छुक भगवान् सूर्य, क्रमशः तीखी किरणों को छोड़ कर, अपने सारे विम्ब को दर्शन योग्य बना कर, पहले सफेद, फिर पीले और फिर लाल होकर आकाश और पृथ्वी दोनों ओर से दबाये जा रहे से अण्डाकार बन कर, कलियुग के प्रताप से विनष्ट सदाचार वाले, पापराशि से पीले पड़े धर्म वाले तथा यवनों से ग्रस्त भारतवर्ष का स्मरण कराते हुए

ततः संवृत्ते किञ्चिदन्धकारे धूप-धूमेनेव व्याप्तासु हरि
भुशुण्डीं स्कन्धे निधाय निपुणं निरीक्षमाणः, आगत-प्रत्यागतं
विदधानः, प्रताप-दुर्ग-दौवारिकः, कस्यापि पादक्षेपध्वनिमिव
ऽश्रौषीत्। ततः स्थिरीभूय पुरतः पश्यन् सत्यपि दीप-प्रकाशेऽव
मसवशादागन्तारं कमप्यनवलोकयन्, गम्भीरस्वरेणैवमवादीत्—"
कोऽत्र भोः ? कः कोऽत्र भोः ?" इति।

अथ क्षणानन्तरं पुनः स एव पादध्वनिरश्रावीति भूयः साक्षे
मवोचत्—"क एष मामनुत्तरयन् मुमूर्षुः समायाति बधिरः ?"

---

षष्ठी। अन्धतमसे = गाढध्वान्ते। 'ध्वान्ते गाढेऽन्धतमसम्' इत्यमरः। च
षामगोचरः = अदृश्यः। सूर्यास्तमनवेलाऽभूदित्यर्थः।

हरित्सु = दिक्षु। भुशुण्डीम् = आयुधविशेषम्। "वन्दूक" इति हिन्दी
आगतप्रत्यागतम् = यातायातम्। विदधानः = कुर्वाणः। प्रतापदुर्गस्यः
तन्नाम्ना ख्यातदुर्गस्य, "किला" इति हिन्दी, दौवारिकः = द्वारपालः। पा
क्षेप-ध्वनिम् = चरणचङ्क्रमणशब्दम्। अवतमसम् = क्षीणध्वान्तम् "अ
समन्धेभ्यस्तमसः" इति सूत्रेण समासान्तोऽच्, तस्य वशात् सामर्थ्या

---

संसार को घोर अन्धकार में ढकेलते हुए, आँखों से ओझल हो गए

उसके बाद, कुछ अँधेरा हो जाने पर और दिशाओं के मानों धूप से उ
वाले धूम से व्याप्त हो जाने पर, वन्दूक को कन्धे पर रख कर गौर से इध
उधर देखते हुए और गश्त लगाते हुए प्रताप दुर्ग के द्वारपाल ने किसी के पैरों
आहट सी सुनी। तब खड़े होकर, सामने देखकर, दीपक का प्रकाश होते हु
भी धुंधलेपन के कारण आने वाले को न देखकर उसने गम्भीर स्वर से क
"अरे यहाँ यह कौन है ? यह कौन है ?"

क्षण भर बाद फिर वही पैरों की आहट सुन पड़ी, इसलिए फिर बिगड़ क
बोला, अरे, 'यह कौन बहरा बिना मुझे जवाब दिये ही मरने के लिये बढ़ता च
आ रहा है ?'

ततो "दौवारिक ! शान्तो भव, किमिति व्यर्थं मुमूर्षुरिति वधिर इति च वदसि ?" इति वक्तारमपश्यतैवाऽऽकर्णि मन्द्रस्वरमेदुरा वाणी। अथ "तत् किं नाज्ञायि अद्यापि भवता प्रभुवर्य्याणामादेशो यद् दौवारिकेण प्रहरिणा वा त्रिः पृष्टोऽपि प्रत्युत्तरमददद् हन्तव्य इति" इत्येवं भाषमाणेन द्वाःस्थेन "क्षम्यतामेष आगच्छामि, आगत्य च निखिलं निवेदयामि" इति कथयन्, द्वादशवर्षेण केनापि भिक्षु-बटुनाऽनुगम्यमानः, कोपि काषायवासाः, धृत-तुम्बी-पात्रः, भस्म-च्छुरित-ललाटः, रुद्राक्ष-मालिका-सनाथित-कण्ठः, भव्यमूर्त्तिः संन्यासी दृष्टः। ततस्तयोरेवमभूदालापः—

---

मुमूर्षुः = मर्तुमिच्छुः। मन्द्रस्वरेण = गम्भीरनादेन, मेदुरा = सान्द्र-स्निग्धा। "सान्द्रस्निग्धस्तु मेदुरः" इत्यमरः। अपश्यता = अनवलोकमानेन, दौवारिकेणेति शेषः। आकर्णि = श्रुतः। अज्ञायि = ज्ञातः। श्रुत इति यावत्। द्वारि तिष्ठतीति द्वाःस्थः = द्वारपालः, तेन। प्रहरिणा = यामिकेन। नगरादिषु सशब्दं जनताजागरवेण चौरनिवारयित्रेति यावत्। कषायेण रक्तं काषायम्, वासो यस्य सः। त्रिः = वारत्रयम्। "द्विस्त्रिश्चतुरिति कृत्वोऽर्थे"

---

तत्पश्चात् उस दौवारिक ने बोलने वाले को न देखते हुए 'द्वारपाल ! शान्त रहो, क्यों बेकार मरणासन्न और वहरा कहते हो ?' यह गम्भीर स्वर से स्निग्ध वाणी सुनी। उसके वाद 'तो क्या आपको अभी तक महाराज शिवाजी का यह आदेश नहीं मालूम है कि द्वारपाल या पहरेदार के तीन वार पूछने पर भी जो व्यक्ति उत्तर न दे, उसे गोली मार दी जाय' यह कहते हुए, द्वारपाल ने, 'क्षमा करो मैं आ रहा हूँ, आकर सारा हाल वताऊँगा' यह कहते हुए, वारह साल के किसी भिक्षु-बालक के आगे-आगे आते हुए किसी कषाय वस्त्रधारी, तुम्वी पात्र लिए हुए, मस्तक पर भस्म लगाये तथा गले में रुद्राक्ष की माला पहने किसी भव्यमूर्ति संन्यासी को देखा। फिर उन दोनों में आपस में इस प्रकार वातचीत हुई।

